# एकादशः सर्गः

अवधूय च तां बुद्धिं बभूवावस्थितस्तदा ।
जगाम चापरां चिन्तां सीतां प्रति महाकपिः ।।5.11.1।।

न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी ।
न भोक्तुं नाप्यलङ्कर्तुं न पानमुपसेवितुम् ।।5.11.2।।

नान्यं नरमुपस्थातुं सुराणामपि चेश्वरम् ।
न हि रामसमः कश्चिद्विद्यते त्रिदशेष्वपि ।।5.11.3।।

अन्येयमिति निश्चित्य भूयस्तत्र चचार सः ।
पानभूमौ हरिश्रेष्ठः सीतासन्दर्शनोत्सुकः ।।5.11.4।।

क्रीडितेनापराः क्लान्ता गीतेन च तथापराः ।
नृत्येन चापराः क्लान्ताः पानविप्रहतास्तथा ।। 5.11.5।।

मुरजेषु मृदङ्गेषु चेलिकासु च संस्थिताः ।
तथाऽऽस्तरणमुख्येषु संविष्टाश्चापराः स्त्रियः ।।5.11.6।।

अङ्गनानां सहस्रेण भूषितेन विभूषणैः ।
रूपसंलापशीलेन युक्तगीतार्थभाषिणा ।।5.11.7।।

देशकालाभियुक्तेन युक्तवाक्याभिधायिना ।
रताधिकेन संयुक्तां ददर्श हरियूथपः ।।5.11.8।।

अन्यत्रापि वरस्त्रीणां रूपसंलापशायिनाम् ।
सहस्रं युवतीनां तु प्रसुप्तं स ददर्श ह ॥5.11.9।।

देशकालाभियुक्तं तु युक्तवाक्याभिधायि तत् ।
रताविरत संसुप्तं ददर्श हरियूथपः ॥5.11.10।।

तासां मध्ये महाबाहुः शुशुभे राक्षसेश्वरः ।
गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ।।5.11.11।।

स राक्षसेन्द्रः शुशुभे ताभिः परिवृतस्स्वयम् ।
करेणुभिर्यथारण्ये परिकीर्णो महाद्विपः ।।5.11.12।।

सर्वकामैरुपेतां च पानभूमिं महात्मनः।
ददर्श हरिशार्दूलस्तस्य रक्षःपतेर्गृहे ।।5.11.13।।

मृगाणां महिषाणां च वराहाणां च भागशः ।
तत्र न्यस्तानि मांसानि पानभूमौ ददर्श सः ।।5.11.14।।

रौक्मेषु च विशालेषु भाजनेष्वप्यभक्षितान् ।
ददर्श कपिशार्दूलो मयूरान् कुक्कुटांस्तथा ।।5.11.15।।

वराहवाध्रीणसकान् दधिसौवर्चलायुतान् ।
शल्यान् मृगमयूरांश्च हनुमानन्ववैक्षत ।।5.11.16।।

कृकलान् विविधांश्छागाञ्छशकानर्धभक्षितान् ।
महिषानेकशल्यांश्च मेषांश्च कृतनिष्ठितान् ।।5.11.17।।

लेह्यानुच्चावचान्पेयान् भोज्यान्युच्चावचानि च ।
तथाऽऽम्ललवणोत्तंसैर्विविधैराखाण्डवै: ।।5.11.18।।

महानूपुरकेयूरैरपविद्धैर्महाधनैः ।
पानभाजनविक्षिप्तैः फलैश्च विविधैरपि ।।5.11.19।।

कृतपुष्पोपहारा भूरधिकां पुष्यति श्रियम् ।
तत्र तत्र च विन्यस्तै: सुश्लिष्टशयनासनैः ।।5.11.20।।

पानभूमिर्विना वह्निं प्रदीप्तेवोपलक्ष्यते ।
बहुप्रकारैर्विविधैर्वरसंस्कारसंस्कृतैः ।।5.11.21।।

मांसैः कुशलसंयुक्तैः पानभूमिगतैः पृथक् ।
दिव्याः प्रसन्ना विविधाः सुराः कृतसुरा अपि ।।5.11.22।।

शर्करासवमाध्वीका: पुष्पासवफलासवाः ।
वासचूर्णैश्च विविधैर्मृष्टास्तैस्तैः पृथक् पृथक् ।।5.11.23।।

संतता शुशुभे भूमिर्माल्यैश्च बहुसंस्थितैः ।
हिरण्मयैश्च कलशैर्भाजनैः स्फाटिकैरपि ।।5.11.24।।

जाम्बूनदमयैश्चान्यैः करकैरभिसंवृता ।
राजतेषु च कुम्भेषु जाम्बूनदमयेषु च ।।5.11.25।।

पानश्रेष्ठां तथा भूमिं कपिस्तत्र ददर्श सः ।
सोऽपश्यच्छातकुम्भानि सीधोर्मणिमयानि च ।।5.11.26।।

तानि तानि च पूर्णानि भाजनानि महाकपिः ।
क्वचिदर्धावशेषाणि क्वचित्पीतान्यशेषतः ।।5.11.27।।

क्वचिन्नैव प्रपीतानि पानानि स ददर्श ह ।
क्वचिद् भक्ष्यांश्च विविधान् क्वचित्पानानि भागशः ।।5.11.28।।

क्वचिदर्धावशेषाणि पश्यन्वै विचचार ह ।

शयनान्यत्र नारीणां शून्यानि बहुधा पुनः ।
परस्परं समाश्लिष्य काश्चित्सुप्ता वराङ्गनाः ।।5.11.29।।

काश्चिच्च वस्त्रमन्यस्या अपहृत्योपगुह्य च ।
उपगम्याबला सुप्ता निद्राबलपराजिताः ।।5.11.30।।

तासामुच्छ्वासवातेन वस्त्रं माल्यं च गात्रजम् ।
नात्यर्थं स्पन्दते चित्रं प्राप्य मन्दमिवानिलम् ।।5.11.31।।

चन्दनस्य च शीतस्य सीधोर्मधुरसस्य च ।
विविधस्य च माल्यस्य पुष्पस्य विविधस्य च ।।5.11.32।।

बहुधा मारुतस्तस्य गन्धं विविधमुद्वहन् ।
स्नानानां चन्दनानां च धूपानां चैव मूर्छितः ।।5.11.33।।

प्रववौ सुरभिर्गन्धो विमाने पुष्पके तदा ।
श्यामावदातास्तत्रान्याः काश्चित्कृष्णा वराङ्गनाः ।।5.11.34।।

काश्चित् काञ्चनवर्णाङ्ग्यः प्रमदा राक्षसालये ।
तासां निद्रावशत्वाच्च मदनेन विमूर्छितम् ।।5.11.35।।

पद्मिनीनां प्रसुप्तानां रूपमासीद्यथैव हि ।

एवं सर्वमशेषेण रावणान्तःपुरं कपिः ।
ददर्श समहातेजाः न ददर्श च जानकीम् ।।5.11.36।।

निरीक्षमाणश्च ततस्ताः स्त्रियः स महाकपिः ।
जगाम महतीं शङ्कां धर्मसाध्वसशङ्कितः ।।5.11.37।।

परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् ।
इदं खलु ममात्यर्थं धर्मलोपं करिष्यति ।।5.11.38।।

न हि मे परदाराणां दृष्टिर्विषयवर्तिनी ।
अयं चात्र मया दृष्टः परदारपरिग्रहः ।।5.11.39।।

तस्य प्रादुरभूच्चिन्ता पुनरन्या मनस्विनः ।
निश्चितैकान्तचित्तस्य कार्यनिश्चयदर्शिनी ।।5.11.40।।

कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः ।
न तु मे मनसः किञ्चिद्वैकृत्यमुपपद्यते ।।5.11.41।।

मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ।
शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ।।5.11.42।।

नान्यत्र हि मया शक्या वैदेही परिमार्गितुम् ।
स्त्रियो हि स्त्रीषु दृश्यन्ते सदा सम्परिमार्गणे ।।5.11.43।।

यस्य सत्त्वस्य या योनिस्तस्यां तत्परिमार्गते ।
न शक्यं प्रमदा नष्टा मृगीषु परिमार्गितुम् ।।5.11.44।।

तदिदं मार्गितं तावच्छुद्धेन मनसा मया ।
रावणान्तःपुरं सर्वं दृश्यते न च जानकी ।।5.11.45।।

देवगन्धर्वकन्याश्च नागकन्याश्च वीर्यवान् ।
अवेक्षमाणो हनुमान्नैवापश्यत जानकीम् ।।5.11.46।।

तामपश्यन्कपिस्तत्र पश्यंश्चान्या वरस्त्रियः ।
अपक्रम्य तदा वीरः प्रस्थातुमुपचक्रमे ।।5.11.47।।

स भूयः सर्वतः श्रीमान् मारुतिर्यत्नमाश्रितः ।
आपानभूमिमुत्सृज्य तां विचेतुं प्रचक्रमे ।।5.11.48।।

## इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे एकादशस्सर्गः।।